# वन्दना

*जय जय हे भगवति सुरभारति!*

*तव चरणौ प्रणमामः।*

*नादतत्त्वमयि ! जय वागीश्वरि!*

*शरणं ते गच्छामः। 1।*

*त्वमसि शरण्या त्रिभुवनधन्या*

*सुरमुनिवन्दितचरणा।*

*नवरसमधुरा कवितामुखरा*

*स्मितरुचिरुचिराभरणा। 2। जय जय............।*

*आसीना भव मानसहंसे*

*कुन्दतुहिनशशिधवले!*

*हर जडतां कुरु बुद्धिविकासं*

*सितपङ्कजरुचिविमले*! । 3 । *जय जय*............।

*ललितकलामयि ज्ञानविभामयि*

*वीणापुस्तकधारिणि*!

*मतिरास्तां नो तव पदकमले*

*अयि कुण्ठाविषहारिणि* ! । 4 । *जय जय*............।

***शब्दार्थ***

*सुरभारति = हे देववाणी, सरस्वती देवी ! नाद-तत्त्वमयि = नादब्रह्मस्वरूप वाली। शरण्या = शरण देने वाली। नवरसमधुरा = शृङ्गारादि नवरसों से मनोहर । मुखरा = गुंजायमान। स्मितम् = मुस्कान। रुचिः = कान्ति। रुचिराभरणा = सुन्दर आभूषणो से युक्त। आसीना =विराजमान। कुन्दः = कुन्द फूल। तुहिनम् = बर्फ। सितम् = सफेद। विभामयि = प्रकाशस्वरूपा। नः = हमारी। अयि = हे। कुण्ठाविषहारिणि = कुण्ठारूपी विष को दूर करने वाली।*

***अन्वयः***

*जय जय हे भगवति सुरभारति! तव चरणौ प्रणमामः। हे नादतत्त्वमयि! वागीश्वरि! ते शरणं गच्छामः।* 1 ।

*त्वं शरण्या त्रिभुवनधन्या सुरमुनिवन्दितचरणा नवरसमधुरा कवितामुखरा स्मितरुचिरुचिराभरणा असि।* 2 । *जय जय*............

*हे कुन्दतुहिनशशिधवले! सितपङ्कजरुचिविमले! मानसहंसे आसीना भव, जडतां हर, बुद्धिविकासं कुरु* । 3 । *जय जय*............

*हे ललितकलामयि ज्ञानविभामयि वीणापुस्तकधारिणि! कुण्ठाविषहारिणि ! तव पदकमले नो मतिः आस्ताम् । 4 । जय जय हे भगवति सुरभारति ! तव चरणौ प्रणमामः ।*

***शिक्षण-सङ्केतः***

***(क) वन्दनापद्यानां समूहगानं कारयत।***

*या कुन्देन्दु-तुषार-हार-धवला या शुभ्र-वस्त्रावृता,*

*या वीणा-वरदण्डमण्डितकरा-या श्वेत पद्मासना।*

*या ब्रह्माच्युत-शङ्.कर-प्रभृतिभिर्देवैः सदा-वन्दिता,*

*सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा।*

*शुक्लां-ब्रह्म-विचार-सार-परमामाद्यां जगद्व्यपिनीम्,*

*वीणा-पुस्तक-धारिणीमभयदां जाड्यान्धकारापहाम्।*

*हस्ते स्फटिकमालिकां च दधतीं पद्मासने संस्थितां*

*वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम्।*

## प्रथमः पाठः

# पुनरावलोकनम्

*मुनिः आश्रमे निवसति।*

*मुनी आश्रमे निवसतः।*

*मुनयःआश्रमे निवसन्ति।*

*गुरुः शिष्यान् पाठयति। गुरूः कुट्यां निवसतः। गुरवः योगाभ्यासं कुर्वन्ति।*

***पिताफलं ददाति।***

***पितरौ फलानि दत्तः।***

***पितरः फलानिददति।***

***नदी प्रवहति।***

***नद्यौ प्रवहतः।***

नद्यः प्रवहन्ति।

धेनुः पश्यति।

 

धेनू पश्यतः।

  

धेनवः क्षेत्रे चरन्ति

***माता जलम् आनयति।***

***मातरौ जलम् आनयतः।***

***मातरः जलम् आनयन्ति।***

***नपुंसकलिङ्गम्***

*दधि पात्रे अस्ति।*

*दधिनी पात्रयोः स्तः।*

*दधीनि पात्रेषु सन्ति।*

***शब्दार्थः***

*निवसति = निवास करते हैं। पाठयति = पढ़ाते हैं। कुर्वन्ति = करते हैं। वेदाभ्यासम्= वेदों का अभ्यास। धेनुः = गाय। गोष्ठे = गोशाला में। मधुकोषेषु = मधुमक्खियों के छत्तों में। परिणमति = रूपान्तरित होता है, परिवर्तित होता है। पात्रयोः = दो पात्रों में।*

***अभ्यासः***

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*निवसन्ति शिष्यान् कुट्यां योगाभ्यासं*

*नद्यौ प्रवहतः धेनू आनयन्ति*

**2.** ***एक पदेन उत्तरत -***

(*क*) ***फलं कः ददाति*** ? (***ख***) ***वस्त्राणि के ददति*** ?

(*ग*) ***मुनयः कुत्र निवसन्ति*** ? (घ) ***शिष्यान् कः पाठयति*** ?

(ङ) ***माता का आनयति*** ? (***च***) ***गोष्ठे काः निवसन्ति*** ?

(*छ*) ***दधि कुत्र अस्ति*** ? (*ज*) ***मधूनि कुत्र सन्ति*** ?

***मधु पुष्पेषु भवति। मधुनी पात्रयोः स्तः। मधूनि मधुकोषेषु सन्ति।***

***जलम्, कुल्यां, गोष्ठे, नद्यौ, पात्रयोः, आश्रमे।***

**3.** ***शब्दरूपाणि लिखत -***

***शब्दः विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्***

***पितृ प्रथमा*** .................. ................. ..................

***मातृ प्रथमा*** .................. ................. ..................

***मुनि प्रथमा*** .................. ................. ..................

**4.** ***म×जूषातः पदानि चित्वा वाक्यानि पूरयत -***

(*क*) ***धेनवः*** ............. ***निवसन्ति।***

(***ख***) ***माता*** ............. ***आनयति।***

(*ग*) ......................................... ***प्रवहतः।***

(घ) ***दधिनी***............. ***स्तः।***

(ङ) मुनयः.................. निवसन्ति। (च) गुरुः ................निवसतः।

5. उचित-क्रियापदं चित्वा वाक्यं शुद्धं कुरुत -

(क) सः मातरं नमन्ति। (नमति, नमामि, नमसि,)

(ख) अयं छात्रः विद्यालयं गच्छन्ति। (गच्छामि, गच्छति, गच्छतः)

(ग) अहं प्रतिदिनं पुस्तकं पठति। (पठसि, पठन्ति, पठामि)

(घ) इयं नदी काश्यां प्रवहसि। (प्रवहन्ति, प्रवहामि, प्रवहति)

(ङ) त्वं पुस्तकं नयति। (नयसि, नयामि, नयन्ति)

6. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) गुरु शिष्यों को पढ़ाते हैं।

(ख) मुनि आश्रम में रहते हैं।

(ग) गुरु वेदों का अभ्यास करते हैं।

(घ) माँ जल लाती है।

7. शब्दानुसारं चित्रनिर्माणं कुरुत-

एकवचनम् द्विवचनम् बहुवचनम्

वृक्षः ........ ....... .......

माला ........ ....... .......

पुष्पम् ........ ....... .......

**शिक्षण-सङ्केतः**

*संस्कृतवाक्यानि वक्तुम् अभ्यासं कारयत।*

*कर्तारः सुलभाः लोके विज्ञातारस्तु दुर्लभाः।*

## द्वितीयः पाठः

*अयं कः ?*

*अयं राष्ट्रपिता मोहनदासकरमचन्द-गान्धी।*

*कथम् अयं राष्ट्रपिता ?*

*अयं वर्तमानभारतराष्ट्रस्य जनकः अस्ति।*

*कथम् अयं प्रसिद्धः ?*

*अयं सत्याग्रहेण अहिंसान्दोलनेन च परतन्त्रं भारतं स्वतन्त्रम्*

*अकारयत्।*

*अयं कः* ?

*अयं अस्माकं राष्ट्रस्य तृतीयः राष्ट्रपतिः* डॉ0 *जाकिर हुसेनमहाभागः*।

*कथम् अयं तृतीयः राष्ट्रपतिः* ?

*अस्य किं वैशिष्ट्यम् आसीत्* ?

*अयं नूतनायाः प्राथमिक-शिक्षापद्धतेः विशेषज्ञःआसीत्*।

*अयं कः* ?

*अयं भारतस्य एकादशः राष्ट्रपति* डॉ0 *ए*0 *पी*0 *जे*0 *अब्दुलकलामः*।

*अस्य जन्म कदा अभवत्* ?

*अस्य जन्म* 1931 *तमे वर्षे अक्टूबर मासस्य प*ञ्*चदशे दिनाङ्के अभवत्*।

*अस्य जन्म तामिलनाडु प्रान्तस्य रामेश्वर नामके स्थाने अभवत्*। *कथम् अयं प्रसिद्धः*
?

*अयं महान् वैज्ञानिकः*। "*मिसाइलमैन*" *इति नाम्ना प्रसिद्धः अभवत*।

*अयं कः* ?

*अयं* डॉ0 *भीमरावअम्बेडकरमहाभागः*।

*कथम् अयं प्रसिद्धः* ?

*स्वतन्त्रभारतस्य संविधाननिर्माणे अस्य अपूर्वं महत्त्वपूर्णंच योगदानम् आसीत्*।

*इयं महाराज्ञी लक्ष्मीबाई*।

*किमर्थम् इयं प्रसिद्धा* ?

*इयं लक्ष्मीबाई* 1857 *तमे वर्षे प्रथम स्वातंत्र्य*

*संग्रामस्य वीरांगना आसीत्*। *त्रयोविंशतिवर्षायु प्राप्ता इयं राजमहिषी आंग्लसाम्राज्यस्य सैन्यबलं प्रतिकर्तुं प्रयत्नवती*। *रणक्षेत्रे वीरगतिं प्राप्तवती पर×च यावज्जीवनं आंग्लशासकानां झाँसीनगरातिक्रमणं नाङ्गीकृतवती*।

इयं का ?

इयं 'भारतकोकिला' श्रीमतीसरोजिनीनायडूमहाशया।

कथम् इयं 'भारतकोकिला' ?

इयं विदुषी कवयित्री सुमधुरभाषिणी च आसीत्।

इयं स्वतन्त्रभारते उत्तरप्रदेशस्य

प्रथमं राज्यपालपदम् अभूषयत्।

इयं का ?

इयं प्रियदर्शिनी इन्दिरागान्धी।

इयं कथं प्रसिद्धा ?

इयम् अस्माकं देशस्य प्रथम-महिला-प्रधानमन्त्री आसीत्।

सर्वे जनाः इमां कुशलप्रशासिकारूपेण श्रद्धया स्मरन्ति।

इयं का ?

इयं भारतानुरागिणी परमविदुषी डॉ0 एनीबेसेण्ट महोदया।

अस्याः का विशेषता ?

इयं जन्मना आङ्ग्लदेशीया।

इयं हिन्दू-विश्वविद्यालयस्य निर्माणाय प्रभूतं धनं विस्तृतं भूखण्डं

च अददात्। अस्याः भाषणेषु रचनासु च संस्कृतवाङ्मयस्य

संस्कृतभाषायाः च गौरवं प्रकाशितम् अस्ति।

इयं देशस्य स्वतन्त्रतायै महत्त्वपूर्णं योगदानम् अकरोत्।

लखनऊनगरम्

लखनऊनगरम् उत्तरप्रदेशस्य राजधानी अस्ति।

इदं प्राचीनं सुरम्यं च नगरम् अस्ति।

अत्र बहूनि दर्शनीयानि स्थलानि सन्ति, यथा-रेजीडेंसीस्थलम्,

इमामबाड़ाभवनम्, सचिवालयश्च।

इदं किम ?

इदं रेजीडेंसीस्थलम् अस्ति।

इदम् अस्माकं देशभक्तानाम् आत्मत्यागं स्मारयति।

प्रथमे स्वतन्त्रतासंग्रामे 1857 तमे वर्षे भारतीयाः वीराः

आङ्ग्लशासनस्य यदा विरोधम् अकुर्वन् तदा देश-भक्ताः अत्रापि आङ्ग्लान् आक्रान्तवन्तः। अस्मिन् युद्धे राष्ट्रभक्तैः स्वरक्तं प्रवाहितम्। तेषां त्यागेनैव स्वतन्त्रतायाम् एकं सोपानं निर्मितम्।

इदं सचिवालयभवनम् अस्ति।

अस्मिन् भवने विधानसभायाः विधानपरिषदश्च अधिवेशनानि भवन्ति।

अस्मिन् एव भवने स्थित्वा राज्यस्य मन्त्रिणः सचिवाः अन्ये

चाधिकारिणः राजकार्यं स×चालयन्ति। सचिवालये एव

उत्तरप्रदेशशासनस्य मुख्यः कार्यालयः अस्ति।

इदं किम् ?

*इदं आंचलिक-विज्ञान-केन्द्रम् अस्ति।*

*किमर्थम् इदं प्रसिद्धम्?*

*इदं हि अनुभवाधारित शिक्षा प्रदानाय विख्यातं वर्तते।*

*इदं केन्द्रं लखनऊनगरस्य मध्ये स्थितं अस्ति।*

*अस्मिन् केन्द्रे अन्वेषणकक्षम् इति नाम्नः भवनमस्ति।*

*अस्य कक्षे भूजलीयान्वेषणं जैव प्रौद्योगिकीक्रान्तिः व्यावहारिक विज्ञानं चेति तिस्त्रः दीर्घिकाः सन्ति।*

*इदम् इमामबाड़ा-भवनम् अतिमनोहरम् अस्ति*

*इदम् अवधशासकानां स्मारकम् अस्ति।*

*अस्य भवनस्य छदिः अतिविस्तृता अस्ति। इयं स्तम्भैः विनापि*

*बहुकौशलेन निर्मिता अस्ति। अस्मिन् एकं विचित्रं सोपानमण्डलम् अस्ति।*

*तत्र नवागन्तुकाः बहुधा मार्गं विस्मरन्ति।*

*अत एव जनाः इदं भवनं 'भूलभुलैया' इति वदन्ति।*

**शब्दार्थः**

सत्याग्रहेण = सत्य के लिए मन, वचन और कर्म से दबाव डालना। अन्यत् = और। अयच्छत् = दिया। कवयित्री = कविता करने वाली। असहत = सहा। अभूषयत् = शोभित किया। प्रेषितवान् = भेजा। भारतानुरागिणी = भारतदेश से प्रेम रखने वाली। प्रभूतम् = बहुत। सुरम्यम् = अतिसुन्दर। आक्रान्तवन्तः = सताये, डराये। स्मारयति = याद दिलाती है। विचलन्ति स्म = विचलित होते थे। छदिः = छत। स्तम्भैः विनापि = खम्भों के बिना भी। अधिवेशनानि = बैठकें।

**अभ्यासः**

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

राष्ट्रपिता अहिंसान्दोलनेन त्यागेनैव कवयित्री संस्कृतवाङ्मयस्य

आक्रान्तवन्त अविष्कृताः, ज्योतिर्विद्, समर्थितम्, ्त्रयोविंशतिवर्षायु,

साम्राज्यस्य, भूजलीयान्वेषणम्, अन्वेषणकक्षम्।

2. एकपदेन उत्तरत-

(क) 'राष्ट्रपिता' नाम्ना कः प्रसिद्धः ?

(ख) "मिसाइलमैन" इति नाम्ना कः प्रसिद्धः ?

(ग) उत्तर-प्रदेशस्य प्रथमं राज्यपालपदं का अभूषयत् ?

(घ) इन्दिरागान्धी कस्य सुपुत्री ?

(ङ) उत्तरप्रदेशस्य राजधानी का ?

(च) 'शून्यम्' इति अंकस्य आविष्कर्ता कः आसीत् ?

**3.** ***पूर्णवाक्येन उत्तरत-***

(*क*) डॉ0 ***भीमरावअम्बेडकरस्य संविधाननिर्माणे कीदृशं योगदानमासीत्*** ?

(***ख***) ***श्रीमती सरोजिनीनायडूः किं पदमभूषयत्*** ?

(*ग*) ***जनाः इन्दिरां केन रूपेण स्मरन्ति*** ?

(घ) डॉ0 ***एनीबेसेण्टमहोदया हिन्दू-विश्वविद्यालयाय किम् अददात्*** ?

(ङ) ***रेजीडेंसीस्थले भारतभक्तैः किं प्रवाहितम्*** ?

***ध्यातव्यम् -***

***"इदम्" शब्दस्य पुंल्लिङ्.गे 'अयम्' इति रूपं भवति। स्त्रीलिङ्गे 'इयम्'इति रूपं भवति। नपुंसकलिङ्गे 'इदम्' इति रूपं भवति। पाठे 'राष्ट्रपिता' इति पुंल्लिङ्गविशेष्येण सह 'अयम'् इति रूपं प्रयुक्तम्। एवमेव 'भारतकोकिला' इति स्त्रीलिङ्गविशेष्येण सह 'इयम्' इति प्रयुक्तम्। नगरम् इति नपुंसकलिङ्गेन सह 'इदम्' इति प्रयुक्तम्। अनेन अयं नियमः अभवत् यत् सर्वनामशब्दाः विशेषणरूपे प्रयुक्ताः भवन्ति। विशेष्ये यत् लिङ्गम्, या विभक्तिः, यत् वचनं च भवति, विशेषणे अपि तत् लिङ्गम्, सा विभक्तिः, तत् वचनं च भवति। सर्वनामशब्दाः- इदम्, तत्, किम्, यत्, अदस्, एतत् चेत्यादयः सन्ति, यथा-***

(*क*) ***अयं राष्ट्रपिता।***

(***ख***) ***इयं भारतकोकिला।***

(*ग*) ***इदं प्राचीनं नगरम्।***

**4.** ***सन्धि-विच्छेदं कुरुत -***

***पदम् सन्धिविच्छेदः***

*यथा- अहिंसान्दोलनेन अहिंसा$आन्दोलनेन*

*अत्रापि* .......................................

*चासहत* .......................................

*नातिदूरे* .......................................

**5.** *म×जूषातः-सर्वनाम-पदानि चित्वा चित्रानुसारं वाक्यानि रचयत -*

*अयम् इयम् इदम् इमाः इमे*

**6. (क)** *म ्जूषातः उचितपदानि चित्वा वाक्यानि पूरयत-*

(1857 *तमे वर्षे*, *सत्याग्रहेण*, *विदुषी कवयित्री*, *लखनऊनगरे* ्)

(*क*) *महात्मागाँधी*.........*परतन्त्रं भारतं स्वतन्त्रम् अकारयत्*।

(*ख*) *लक्ष्मीबाई*...................*प्रथम स्वातंत्र्य संग्रामस्य वीरांगना आसीत्*।

(*ग*) *श्रीमतीसरोजिनीनायडूमहाशया*..................................*आसीत्*।

(*घ*) *विज्ञान-आंचलिक-केन्द्रम्*.....................*स्थितमस्ति*।

**(ख) उचितं संयोजनं कुरुत-**

(क) रेजीडंेसीस्थलम् अनुभवाधारित शिक्षणप्रदानाय।

(ख) इमामबाड़ा प्रदेशस्य मुख्यकार्यालयः।

(ग) सचिवालयः देशभक्तानाम् आत्मत्यागम्।

(घ) विज्ञान-आंचलिक-केन्द्रम् अवधशासकानां स्मारकम्।

**7- संस्कृतभाषायाम् अनुवादं कुरुत –**

(क) महात्मा गान्धी ने देश के लिए कार्य किया।

ख) यहाँ बहुत दर्शनीय स्थल हैं।

(ग) इस स्मारक को देखने लोग आते हैं।

(घ) रेजीडेंसी-स्थल पर देशभक्तों को याद करते हैं।

(ङ) राजभवन में राज्यपाल रहते हैं।

**शिक्षण-सङ्केतः**

क) कक्षायां छात्रैः अनुच्छेदवाचनं कारयत।

(ख) तत्-किम्-एतत्-शब्दरूपाणां लेखनं वाचनं च कारयत।

**अपन्थानं तु गच्छन्तं सोदरोऽपि विमु×चति।**

## तृतीयः पाठः

## अभिलाषः

दयामय! देव! दीनेषु दयादृष्टिः सदा देया।

प्रतिज्ञा दीनरक्षाया दयालो! जातु नो हेया।

मनुष्या मानवा भूत्वा इदानीं दानवा जाताः।

तदेषा मूढता देशाद् द्रुतं दूरे त्वया नेया।

त्वदुपदेशामृतं त्यक्त्वा विपन्नो हन्त लोकोऽयम्।

तदुद्धाराय चैतेषां प्रभो! गीता पुनर्गेया।

किमधिकं ब्रूमहे भगवन्! विनीतप्रार्थनैकेयम्।

यदेते बालकाः स्वीयाः प्रभो नो विस्मृतिं नेयाः।

### शब्दार्थः

दयादृष्टिः = कृपापूर्ण भाव। देया = देना चाहिए। जातु = कदाचित् (कभी)। नो = नहीं। हेया = छोड़ें। जाताः = हो गये हैं। इदानीं = इस समय। मूढता = अज्ञानता। द्रुतम् = शीघ्र। नेया = ले जानी चाहिए। त्वदुपदेशामृतम् = तुम्हारे उपदेशरूपी अमृत को। त्यक्त्वा = छोड़कर। विपन्नः = दुःखी। हन्त = खेद है। ब्रूमहे = कहें। गेया = गायी जानी

*चाहिए। स्वीयाः = अपने। विनीतप्रार्थनैकेयम् = (विनीत+प्रार्थना+ एका+इयम्) विनम्र प्रार्थना एक यह।*

***अभ्यासः***

1. ***उच्चारणं कुरुत पुस्तिकायां च लिखत-***

***दीनरक्षायाः, त्यक्त्वा, लोकोऽयम्,***

***पुनर्गेया ,विनीतप्रार्थनैकेयम् ,तदुद्धाराय***

2. ***एकपदेन उत्तरत -***

(क) ***दीनेषु का देया*** ? (ख) ***कस्याः प्रतिज्ञा न हेया*** ?

(ग) ***मूढता कस्मात् दूरे नेया*** ? (घ) ***मानवानाम् उद्धाराय पुनः का गेया*** ?

3. ***पाठात् उचितपदानि चित्वा वाक्यं पूरयत -***

(क) ***दीनरक्षायाः*** ...................................................................***नो हेया।***

(ख) ***मूढता देशात्*** ............................................................ ***नेया।***

(ग) ***उद्धाराय*** .................................................................... ***पुनः गेया।***

(घ) ***यदेते बालकाः*** ................................................................... ***नेयाः।***

4. ***रेखांकितपदानि आधृत्य प्रश्ननिर्माणं कुरुत -***

***यथा-दीनेषु दयादृष्टिः सदा देया। दीनेषु का देया*** ?

(क) ***मूढता देशात् दूरे त्वया नेया।***

(ख) ***गीता पुनर्गेया।***

5. उदाहरणानुसारं लिखत -

यथा- लोकोऽयम् = लोकः + अयम्

(क) त्वदुपदेशामृतं =

(ख) किमधिकं =

(ग) यदेते =

(घ) चैतेषां =

(ङ.) पुनर्गेया =

6. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) मेरी यह नम्र प्रार्थना है।

(ख) देश से गरीबी दूर करें।

(ग) कल्याण के लिए शिक्षा दें।

(घ) स्वास्थ्य के लिए प्रदूषण दूर करें।

7. उचितकथनानां समक्षम् 'आम्' अनुचितकथनानां समक्षं 'न' इति लिखत -

(क) दीनेषु दयादृष्टिः देया। ......................

(ख) दीनरक्षायाः प्रतिज्ञा हेया। ......................

(ग) प्रतिदिनं दन्तधावनं कुर्यात्। ......................

(घ) सुन्दरं लेखं न लिखेत्। ......................

**शब्दार्थः**

*ध्यातव्यम्* - *धातोः योग्यार्थबोधनाय* (चाहिए) *'यत्' प्रत्ययः भवति, यथा-दातुं योग्यम्* = *देयम्* (*देना चाहिए*)। *अस्य त्रिषु लिङ्गेषु रूपाणि भवन्ति। यथा- दा$यत्* =*देयम्* (*नपुं*0), *देया* (*स्त्री*0), *देयः* (*पु*0) (*देना चाहिए*)।

*धातुः +प्रत्ययः - रूपम्*

*दा +यत्* = *देयम्ग्नी*

*नी +यत्* = *नेयम्*

*हा + यत्* = *हेयम्*

*गै +यत्* = *गेयम्*

**शिक्षण-सङ्केतः**

1. *पद्यानां सस्वरवाचनं कारयत*।

2. *पाठे वर्णितानाम् अभिलाषाणां छात्रैः अभ्यासं कारयत*।

*मनोरञ्जनाय*

*मत्कुण-पिपीलिका-संवादः*

*मत्कुणः उवाच-*

*कथय भगिनि! किं तव अभिधानम्* ? *कृत्वा स्वयं श्रमं भोक्तव्यम्*

*कुत्र तव वास-स्थानम् ? इति मे अस्ति निजं मन्तव्यम्।*

*कुतः सम्प्रति आगच्छसि ? अतः श्रमे सततं संलग्ना*

*त्वरितं कुत्र गच्छसि ? नैव कदापि गतिर्मे भग्ना ।*

*अङ्गं तव अतिशय-सुकुमारम् त्वं सदैव पर-तल्पे लीनः*

*वहसि तथापि अहो! गुरु-भारम्। पीत्वा पर-रुधिरं खलु पीनः।*

*धावन्ती गच्छसि अविरामम् किन्तु इदं न उचित-कर्तव्यम्*

*कथय कदा कुरुषे विश्रामम् ? न इदं वेद-शास्त्र-मन्तव्यम् ।*

*पिपीलिका उवाच-*

*मम पिपीलिका इति अभिधानम् अतः श्रमं कृत्वा भोक्तव्यम्वि*

*वरे विद्धि मदीयं स्थानम्। इति भवताऽपि मतं मन्तव्यम्।*

*अति दूरादिह मम आगमनम् अस्तु, जहीहि, देहि पन्थानम्*

*दूरे एव पुनर्मम गमनम्। दूरे मम गन्तव्य-स्थानम् ।*

***शब्दार्थः***

***मत्कुणः = खटमल। पिपीलिका = चींटी। अभिधानम् = नाम। विवरे = बिल में । विद्धि = जानो। पर-तल्पे = दूसरे के बिस्तर पर। जहीहि = छोड़ो।***

***विशेषः- मत्कुण-पिपीलिकयोः मध्ये स×जातस्य उपर्युक्तरोचक-संवादस्य स्वाध्यायं कारयत तथा पिपीलिकायाः श्रमशीलतया आत्मनिर्भरतया च प्राप्तसंदेशं छात्रान् श्रावयत।***

## *शब्दार्थः*

***कश्चिद् = कोई। प्रासादम् = राजमहल। अतोषयत् = सन्तुष्ट किया। सत्कृतः = सत्कार किया गया। अभीष्टम् = मनोवाञ्छित, मनचाहा। वरय = वरदान माँगो। स्पृश्यमानाः = छुये गये। भवन्तु = हो जाएँ। तथास्तु = ऐसा ही हो। अन्तर्हितः = अन्तर्धान हो गया। प्रविष्टः = प्रवेश किया हुआ। अस्पृशत् = स्पर्श किया। स्पृष्टानि = छुये हुए। सद्यः = तुरन्त। जातानि = हो गया। नितराम् =पूरी तरह से। अतुष्यत् = सन्तुष्ट हो गया। महती = बहुत बड़ी। पिपासा = पीने की इच्छा। जाता = उत्पन्न हुई। पातुम् = पीने के लिए। उद्यतः = तैयार हुआ। स्पृष्टम् = छुआ हुआ या स्पर्श किया गया। सुवर्णपिण्डम् = सोने का गोला। उक्तम् = कहा गया। मृषा = झूठ। आगता = आयी। समाश्वासयितुम् = आश्वस्त करने के लिए, भरोसा दिलाने के लिए। प्रवृत्तः = लग गया। अङ्के उपवेशयति स्म = गोद में बैठाया। हन्त = अत्यन्त दुःख है। प्रतिमा = मूर्ति। सञ्जाता = हो गयी। व्यलपत् = विलाप किया। निवर्तयतु = लौटा लें, वापस ले लें।***

## *अभ्यासः*

**1.** ***उच्चारणं कुरुत पुस्तिकायां च लिखत-***

***कश्चित् स्वस्त्यस्तु मुनिर्नैवम् इत्युक्त्वा***

***साधूक्तम् समाश्वासयितुम् शोकेनोच्चैः तत्रैवान्तर्हितः***

**2.** ***पूर्णवाक्येन उत्तरत -***

(*क*) ***मायादासः कः आसीत्*** ?

(*ख*) ***मायादासः किं अयाचत*** ?

(*ग*) '***अभीष्टं वरं वरय***' ***इति कः कं प्रति अवदत्*** ?

(घ) 'हन्त! कुमारी सुवर्णप्रतिमा सञ्जाता' इदं वाक्यं कः अवदत् ?

(ङ) किं दुःखस्य कारणम् ?

ध्यातव्यम्

(क) धातोः भूतकालस्य अर्थे क्तप्रत्ययस्य प्रयोगः भवति यथा- कृक्त =कृतम् (किया गया)। पठ्+क्त = पठितम् (पढ़ा गया)। अस्य प्रयोगः क्रियारूपेण विशेषणरूपेण च भवति। अस्य रूपाणि त्रिषु लिङ्गेषु भवन्ति।

(ख) धातोः तव्यत् प्रत्ययस्य प्रयोगः योग्यार्थबोधनाय (चाहिए) भवति, यथा - कृ +तव्यत् = कर्त्तव्यम्। मन+तव्यत् = मन्तव्यम्। अस्यापि प्रयोगः क्रियारूपेण विशेषणरूपेण च भवति। अस्य रूपाणि त्रिषु लिङ्गेषु भवन्ति।

3. उदाहरणानुसारं सन्धि-विच्छेदं कुरुत-

सन्धिपदम् सन्धिविच्छेदः पूर्वपदस्य अन्तिमपदस्य द्वयोः योगेन अन्तिमः वर्णः पूर्ववर्णः सन्धियुक्तवर्णः साधूक्तम् साधु$उक्तम् उ उ ऊ

सुन्दराणीमानि ...........

चावदत् ....................

शोकेनोच्चैः ...............

सत्कारेणातोषयत् ..........

4. संस्कृतभाषायाम् अनुवादं कुरुत-

(क) उसका नाम केशव था।

(ख) उसके पिता का नाम रामदास था।

(ग) उसकी माता का नाम मायादेवी था।

(घ) एक बार वह बाजार गया।

(ङ) वहाँ वह अपने मित्र से मिला।

5. मञ्जूषातः क्रियापदानि चित्वा वाक्यानि पूरयत-

जाता जातानि अयाचत आनयत् वरय

(क) मुनिः अवदत् अभीष्टं वरम् ................।

(ख) सः भूपतिः वरम् ..................।

(ग) तेन स्पृष्टानि वस्तूनि सद्यः एव सौवर्णानि .............।

(घ) तेन स्पृष्टा म×जरी सुवर्णमयी ..........।

(ङ) मायादासः उद्यानात् जलम् ....................।

6. अस्य पाठस्य कथां स्वशब्देषु हिन्दीभाषायां लिखत।

7. चित्रं दृष्ट्वा मञ्जूषातः पदानि च प्रयुज्य वाक्यानि रचयत-

शिक्षकः छात्रः प्रश्नम्

पृच्छति लिखति अभ्यासपुस्तिकायाम्

श्यामपट्टे छात्राः पृच्छन्ति लिखन्ति

*.यथा-शिक्षकः  श्यामपट्टे  लिखति। ......*

***शिक्षण-सङ्केतः***

*लोभे आधारिताः अन्याः कथाः बालकान् श्रावयत।*

*केतकीगन्धमाघ्रातुं स्वयमायान्ति षट्पदाः।*

**पञ्चमः पाठः**

## वयं स्वाधीनाः

लोकेऽधुना वयं स्वाधीनाः।

तिमिरो गतः प्रकाशो जातः।

क्रीडार्थं दिवसोऽप्यायातः।

नव्यं युगं नवीनो देशो वार्तागताखिला प्राचीना।

लोकेऽधुना वयं स्वाधीनाः । 1 ।

पद्मश्रीर्विहसति पुलिनेषु।

हासः खेलति जनाधरेषु।

धनान्विताः सर्वे दृश्येरन् शिष्येरन् देशे न हि दीनाः।

लोकेऽधुना वयं स्वाधीनाः । 2 ।

स्त्रीपुंसयोः समोऽस्त्यधिकारः।

स्वप्नो जातोऽयं साकारः।

संविधाननवपथानुकूला शासननीतिर्नवा नवीना।

लोकेऽधुना वयं स्वाधीनाः । 3 ।

शान्तिर्मिलति सुरक्षान्यायः।

सहकारः सहचरः सहायः।

उच्चाशयता पुना राजते मनसि भावना कापि न हीना ।

लोकेऽधुना वयं स्वाधीनाः । 4 ।

-डॉ0 आजाद मिश्रः 'मधुकर'

**शब्दार्थः**

अधुना = इस समय। तिमिरः = अन्धकार। दिवसोऽप्यायातः = (दिवसः+अपि+ आयातः) दिवस भी आ गया। नव्यम् = नया। वार्तागताखिला प्राचीना =(वार्ता$गता$ अखिला) बात सम्पूर्ण रूप से समाप्त हो गयी, पुरानी परिस्थितियां अब नहीं रहीं। पद्मश्रीः = कमलों की शोभा। पुलिनेषु = तटों पर। अधरेषु = ओठों पर। धनान्विताः=धन से युक्त, धनवान्। दृश्येरन् = दिखलायी दें। शिष्येरन्=शेष रहें। समोऽस्त्यधिकारः=(समः+अस्ति+अधिकारः) समान अधिकार है। सहकारः = सहयोग। सहचरः = साथी। उच्चाशयता = उच्च विचार।

1. उच्चारणं कुरुत पुस्तिकायां च लिखत -

क्रीडार्थम् दिवसोऽप्यायातः उच्चाशयता स्वतन्त्रतायाः

पद्मश्रीर्विहसति धनान्विताः शिष्येरन् समोऽस्त्यधिकारः

2. पूर्णवाक्येन उत्तरत-

(क) अधुना लोके वयं कीदृशाः स्मः ?

(ख) अखिला प्राचीना वार्ता किम् अभवत् ?

(ग) *पुलिनेषु का विहसति* ?

(घ) *अस्माकं कः स्वप्नः साकारः जातः* ?

(ङ) *इदानीं शासननीतिः कीदृशी अस्ति* ?

**3.** ***सन्धि-विच्छेदं कुरुत -***

***पदम् सन्धि-विच्छेदः***

***जनाधरेषु*** ....................................

***पथानुकूला*** ....................................।

***स्वाधीनाः*** ....................................।

**4.** ***समासविग्रहं कुरुत -***

***पदम् समासविग्रहः***

***शासननीतिः शासनस्य नीतिः***

***भोजनालयः*** ...........................

***पाठशाला*** ............................

***वटवृक्षः*** ............................

**5.** ***उपसर्गाणां क्रियाणां च योगं कृत्वा पदनिर्माणं कुरुत-***

***यथा- अव+ अकिरत्*** = ***अवाकिरत्***

***प्र*** + ***अचलत्*** = ............................

*आ + हसति =* ............................

*सम् + अकरोत् =* ............................

*परा + अवर्तत =* ............................

*उप+अगच्छत् =* ............................

*वि +हसति =* .........................

6. *संस्कृतभाषायाम् अनुवादं कुरुत -*

(*क*) *आज हमारा देश स्वतन्त्र है।*

(*ख*) *अन्धकार समाप्त हो गया है।*

(*ग*) *जल में कमल खिले हुए हैं।*

(घ) *समाज में स्त्री-पुरुषों को समान अधिकार प्राप्त है।*

(ड़) *हम एक साथमिलकर रहते हैं।*

7. *श्लोकांशान् योजयत-*

*'क' 'ख'*

*पद्मश्रीर्विहसति पुलिनेषु सहकारः सहचरः सहायः।*

*स्त्रीपुंसयोः समोऽस्त्यधिकारः हासः खेलति जनाधरेषु।*

*शान्तिर्मिलति सुरक्षान्यायः स्वप्नो जातोऽयं साकारः।*

*संविधाननवपथानुकूला मनसि भावना कापि न हीना।*

*उच्चाशयता पुना राजते शासननीतिर्नवा नवीना।*

***शिक्षण-सङ्केतः***

1. ***पाठस्य कवितायाः सामूहिकवाचनं कारयत।***

2. ***कवितायाः भावं हिन्दीभाषायां लेखनस्य अभ्यासं कारयत।***

## स्मरणीयम्

***रसाणां नामानि***

***कटुः-कड़वा तिक्तः-तीखा***

***कषायः-कसैला मधुरः-मीठा***

***अम्लः-खट्टा लवणः-नमक***

***सम्भावितस्य चाकीर्तिः मरणादतिरिच्यते।***

**षष्ठः पाठः**

## प्रयत्ने किं न लभेत

*जीवने नास्ति किमपि असाध्यम्। प्रयत्नेन सर्वं खलु साध्यम् इति। कर्मनिश्ठाः जनाः विशमपरिस्थितौ स्वकर्तव्यपथात् विचलिताः न भवन्ति। ऐतेशु कर्मवीरेशु*

*सुधाचन्द्रन्-भागवत सुब्रह्मण्यम चन्द्रषेखर-स्टीफन हाकिंग्समहोदयानां जीवनम् अस्माकं कृते प्रेरणादायकमस्ति।*

### सुधाचन्द्रन्

*सुधाचन्द्रन् महोदया एका प्रसिद्धा नृत्यकलानिपुणा अभिनेत्री अस्ति। अस्याः जन्म तमिलभाशीपरिवारे अभवत्। बाल्यकालादेव सा नृत्याभ्यासं प्रारभत्। दुर्भाग्यवषात् एकस्यां दुर्घटनायां तस्याः दक्षिणपादः भड्गः अभवत्। प्राणरक्षार्थं चिकित्सकैः तस्याः दक्षिणपादं षरीरात् पृथक कृतम्। षनैः षनैः सा स्वस्था अभवत्। आत्मबलेन कृत्रिमपादस्य सहाय्येन सा पुनः नर्तनम् आरब्धवती। इदानीं नर्तने अभिनये च तस्याः कीर्तिः राजते।*

## भागवत सुब्रह्मण्यम चन्द्रषेखरः

भारतीय क्रिकेटक्रीडायां 'स्पिन' इति कलायाः ऐन्द्रजालिकम् भागवतचन्द्रषेखरं को न जानाति। अस्य जन्म कर्णाटक प्रान्तस्य मैसूर नगरे 17 मई 1945 तमे वर्षे अभवत्। षैषवे एव चन्द्रषेखरः 'पोलियो' इति व्याधिना ग्रस्तः। येन दक्षिणहस्तस्य मणिबन्धः अत्यन्तं प्रभावितोऽभवत्। किन्तु आत्मबलेन क्रिकेटस्पर्धायां कन्दुकक्षेपविधौ तथा निश्णातः अभवत् येन क्रिकेटक्रीडा जगति स 'स्पिन्' कलायाम् अद्वितीयः जातः। चन्द्रषेखरः अश्टपंचाषत् (58) टेस्ट स्पर्धासु द्विचत्वारिंषदधिकंषतद्वयम् (242) विकेटं गृहीतवान्। अयं भारतसर्वकारेण 'पद्मश्रीः' इति अलङ्.करणेन अर्जुन पुरस्कारेण च विभूशितः।

## स्टीफन हांिकंग्स

स्टीफनहॉकिंग इति नाम्ना सुप्रसिद्धस्य आङ्.ग्ल वैज्ञानिकस्य जन्म 1942 तमेवर्शे जनवरीमासस्य अश्टमे दिनाङ्.के अभवत्। अयं बाल्यकालादेव प्रतिभावान् आसीत्। अस्य बुद्धिमत्तां विलोक्य जनाः इमं 'आईस्टीन' इति नाम्ना संबोधयन्ति स्म। अयं स्व अध्ययनकाले संगणकयन्त्रं निर्मितवान्। पुनष्च भौतिकषास्त्रे 'ष्यामविवर' (ब्लैकहोल) इति विशयमधिकृत्य षोधकार्यं कृतवान्।

स स्वगृहे सोपानेभ्यः पतितः तथा मोटर न्यूरान' इति असाध्यरोगेण ग्रस्तः। रोगवषात् षारीरिकदृश्ट्या अषक्तोऽपि स आत्मबलेन स्वकीयं लक्ष्यं प्राप्तुं संघर्शं न त्यक्तवान्। गच्छताकालेन अयं महानुभावः विज्ञानविशयकानि अनेकानि पुस्तकानि

*लिखितवान्। 'हॉकिंग विकिरण' इति अस्य विषिश्टं योगदानमधिकृत्य अस्मै विविधाः पुरस्काराः प्रदŸ।*

*अनेनप्रकारेण अस्माभिः ज्ञातं यत् उद्यमेन, साहसेन, धैर्येण आत्मविष्वासेन च स्वलक्ष्यं प्राप्तुं षक्यते।*

**शब्दार्थः**

***किमपि= कुछ भी। असाध्यम्= कठिन। खलु= निष्चय। कर्तव्यपथात्= कर्तव्यसे। विचलिताः= विचलित। बाल्यकालादेव=बचपन से ही। प्रारभत्=आरम्भ किया। पादभङ्.गः = पैर टूट गया। ऐन्द्रजालिकम्= जादूगर। षैषवे एव = बचपन में ही। व्याधिना = रोग से। मणिबन्धः= कलाई। कन्दुकक्षेपविधौ= गेंदबाजी (क्रिकेट क्षेत्र में) निश्णातः=निपुण। अश्टपंचाषत्=अट्ठावन (58)। द्विचत्वारिंषतधिकंषतद्वयम्=दो सौ बयालीस (242)। एकविंषतितमे वयसि=इक्कीस वर्श में। सोपानेभ्यः=सीढ़ियों से।***

**अभ्यासः**

**1.*उच्चारणं कुरूत पुस्तिकायां च लिखत-***

*असाध्यम्, विशमपरिस्थितौ, दुर्घटनायाम्, पृथक्कृतम्, आत्मबलेन, क्रिकेटक्रीडायाम्, दक्षिणहस्तस्य, प्रभावितोऽभवत्, कन्दुकक्षेपविधौ,*

*द्विचत्वारिंषदधिकषतद्वयम्, आङ्.गलवैज्ञानिकस्य, विशयमधिकृत्य, साहाय्येन, अषक्तोऽपि, स्वकŸव्यपथात्, सोपानेभ्यः, अश्टपंचाषत्,।*

**2.*एकपदेन उत्तरत***

(*क*) *सुधाचन्द्रन्महोदयायाः जन्म कस्मिन् परिवारे अभवत्* ?

(*ख*) *कस्यां कलायां सा अपूर्वां प्रतिभां प्राप्तवती* ?

(*ग*) *चन्द्रषेखरः टेस्टस्पर्धासु कति विकेटं गृहीतवान्* ?

(घ) 1978 तमे वर्शे अयं केन पुरस्कारेण सम्मानितः ?

(ड.)स्टीफन हॉकिन्स भौतिकशास्त्रे कस्य विषयम् अधिकृत्य शोधकार्यं कृतवान् ?

3.पूर्णवाक्येन उत्तरत

(क) सुधाचन्द्रन् महोदया का अस्ति ?

(ख) भागवत सुब्रह्मण्यचन्द्रषेखरःकेन अलंकरणेन पुरस्कारेण च विभूशितः ?

तस्याः, द्विचत्वारिंशद्धिकंशतद्वयम्, नृत्यकलानिपुणा अभिनेत्री च, संगणकयंत्रम्

4.सन्धिविच्छेदः कुरुत-

पदम् सन्धिविच्छेदः

यथा- बाल्याकालादेव बाल्यकात्यात्$ एव

पृथक्कृतम् --------

स्वात्मबलेन --------

प्रभावितोऽभवत् --------

रुग्णस्यापि --------

5.म×जूषातः पदानि चित्वा वाक्यानि पूरयत-

(क) सुधाचन्द्रन् महोदया एका सुप्रसिद्धा ....................................अस्ति।

(ख) इदानीं................................................कीर्तिः नर्तने अभियने च राजते।

(ग) चन्द्रशेखरः अष्टपंचाशत् टेस्ट स्पर्धासु ...................विकेटं गृहीतवान्।

(घ) स्टीफनहाकिंग्स स्व अध्ययनकाले:............निर्मितवान्।

6.संस्कृतभाशायाम् अनुवादं कुरुत-

(क) बाल्यकाल से सुधाचन्द्रन् ने नृत्य का अभ्यास प्रारम्भ किया।

(ख) भागवत चन्द्रषेखर का जन्म कर्नाटक के मैसूर नगर में हुआ था।

(ग) क्रिकेट जगत की सर्वाधिक प्रसिद्ध पत्रिका 'विजडन' है।

(घ) हम मेहनत, साहस, धैर्य से अपने लक्ष्य को प्राप्त कर सकते हैं।

7.अधोलिखित पदानि प्रयुज्य वाक्यरचनां कुरुत-

यथा-अभिनेत्री सुधाचन्द्रन एका अभिनेत्री अस्ति।

कर्णाटक, अद्वितीय, संगणक, यंत्रम

शिक्षणसङ्.केतः-

अस्य पाठस्य छात्रैः अन्यदपि षीर्शकम् इति चिन्तयत।

। साहसे श्रीः प्रतिवसति ।

## सप्तमः पाठः

## प्रहेलिकाः

*दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः।*

*गुणस्यूतिः समृद्धोऽपि परपादेन गच्छति।* 1 ।

*शोभितोऽस्मि शिखण्डेन दीर्घैः पक्षैरलङ्कृतः।*

*राष्ट्रियो विहगश्चास्मि, नृत्यं पश्यन्ति मे जनाः।* 2 ।

*पठितो नास्म्यहं कि×िचत् तथापि साक्षरोऽस्म्यहम्।*

*पादैर्विनैव गच्छामि कथयामि विना मुखम्।* 3 ।

*क्वचित् प्रस्तरतुल्योऽस्मि क्वचिच्च तरलं पुनः।*

*क्वचिद्वायुसमं सूक्ष्मं, मां पश्यन्ति सदा जनाः।* 4 ।

*रेफादौ मकारोऽन्ते वाल्मीकिः यस्य गायकः।*

*सर्वश्रेष्ठं यस्य राज्यं वद कोऽसौ जनप्रियः।* 5 ।

## अभ्यासः

**1.** *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

दन्तैर्हीनः पक्षैरलङ्कृतः क्वचिद्वायुसमम्

साक्षरोऽस्म्यहम् पादैर्विनैव प्रस्तरतुल्योऽस्मि

**शब्दार्थः**

दन्तैः हीनः = दाँतो से रहित (बिना दाँत के)। शिलाभक्षी = पत्थर खाने वाला। निर्जीवः = बेजान। गुणस्यूतिः = सूत (रस्सी) से सिला। समृद्धोऽपि = धनवान होने पर भी। परपादेन = दूसरे के पैर से। शिखण्डेन = पंख (मयूर पिच्छ) से। विहगश्चास्मि = (विहगः+च+अस्मि) और पक्षी हूँ। पादैर्विनैव = (पादैः+विना+एव) पैरों के बिना ही। साक्षरोऽस्म्यहम् = (साक्षरः+अस्मि+अहम्) मंैं साक्षर हूँ, अक्षर सहित। प्रस्तर-तुल्यम् = पत्थर की तरह (कठोर)। रेफादौ = प्रारम्भ में रेफ (र)।उपानह् = जूता (इसका रूप 'उपानत्-उपानहौ-उपानहः' -जैसा चलता है।)

2. एकपदेन उत्तरत -

(क) दन्तैः हीनः शिलाभक्षी कः अस्ति ?

(ख) पादैः विना कः गच्छति ?

(ग) राष्ट्रियः विहगः कः अस्ति ?

(घ) कस्य राज्यं सर्वश्रेष्ठम् ?

(ङ) पाठे जलस्य कति रूपाणि वर्णितानि ?

3. मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-

न विना सदा पुनः च

यथा- छात्राः ..सदा.....शिक्षकं नमन्ति।

(क) असत्यवचनं ....................कथनीयम्।

(ख) प्रतिदिनं दन्तधावनं स्नानं.................कुर्यात्।

(ग) जलं ....................जीवनं न सम्भवति।

(घ) स्वपाठं ................पठ।

4. पाठे प्रयुक्तानि लट्लकारस्य क्रियापदानि लिखत-

यथा- गच्छति, अस्मि ................

5. सन्धि-विच्छेदं कुरुत -

पदम् सन्धि-विच्छेदः

समृद्धोऽपि ....................

शोभितोऽस्मि ....................

मकारोऽन्ते .....................

क्वचिच्च ....................

6. उपयुक्तशब्देन वाक्यं पूरयत-

(क) मयूराः ......................................। ( नृत्यति, नृत्यन्ति।)

(ख) जनाः ..................................... पिबन्ति। (जलम्, जलेन।)

(ग) जनाः चित्राणि ........................ । (पश्यन्ति, पश्यति।)

7. रेखांकितपदानि आधृत्य प्रश्ननिर्माणं कुरुत -

यथा- मयूरस्य नृत्यं जनाः पश्यन्ति। मयूरस्य नृत्यं के पश्यन्ति ?

(क) उपानत् परपादेन गच्छति।

(ख) पत्रं पादेन विना गच्छति।

(ग) हिमः जलस्य एव रूपम् अस्ति।

8.चित्रं दृष्ट्वा मञ्जूषातः पदानि च चित्वा वाक्यानि रचयत -

पश्यन्ति, जनाः, बालकाः, देविका, केशवः, खेलन्ति, खगाः, पश्यति

पुष्पाणि, चित्रपतङ्गाः, सूर्यः, उड्यन्ते, कूजन्ति, उदयति, सन्ति।

.शिक्षण-सङ्केतः

क) बालकाः परस्परं प्रहेलिकाः पृच्छन्तु, इत्थं कथयत।

(ख) बालकैः अन्यप्रहेलिकानां सङ्ग्रहं कारयत।

प्रहेलिकायाः उत्तराणि-ख्जलम्, पत्रम्, रामः, उपानत्(ह्), मयूरः,

धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्।

## अष्टमः पाठः

# श्रम एव विजयते

अमेरिकादेशे एकस्मिन् स्थाने सैनिकानाम् आवासाय निर्माणकार्यं प्रचलद् आसीत्। तत्र द्वारादिनिर्माणहेतोः काष्ठस्य गुरुतरः खण्डः नीयते स्म। केचित् सैनिकाः बृहत्कायं तं काष्ठखण्डं भूमेः उत्थाप्य यानम् आरोपयितुं यतमानाः आसन्। किन्तु काष्ठस्य अतिभारत्वात् बहुप्रत्यये अपि ते अक्षमा अभवन्।तेषां सैनिकानाम् एकः नायकः अपि आसीत्, य दूरत एव अधिकबलप्रयोगाय तान् प्रेरयति स्म।

अत्रान्तरे कश्चन् तुरङ्गाधिरूढः तत्र आगतः। स भारवहने अक्षमान् सैनिकान् विलोकयन् नायकम् अवदत् - किं पश्यति भवान्? यदि एतेषां सहयोगं भवान् कुर्यात्, तदा कार्यं सुकरं स्यात्।नायकः प्रोवाच - किं न वेत्ति भवान् ? अहम् एतेषाम् अधिकारी अस्मि। कथम् एतैः सह कार्यं कुर्याम्?तत्कथनं श्रुत्वा सः अश्वसादी अश्वाद् अवातरत्, निजं कोटपरिधानं च अवतार्य भूमौ न्यदधात्। ततः असौ काष्ठखण्डस्य उन्नयने सैनिकैः साकं बलसाहाय्यम् अकरोत्। काष्ठखण्डः याने आरोपितः अभवत्। सर्वे तस्य सहयोगं प्राशंसन्। नायकः अपि धन्यवादं वितीर्णवान्।तदनु स आगन्तुकः पुनः अश्वम् आरुह्य नायकम् अभाषत- महाशय! यदा कदाचिद् ईदृशः अवसरः आपतेत्, प्रधानसेनापतिः वाशिंगटनः स्मर्यताम्। स पुनरपि आगमिष्यति। स्वसेनापतिं वाशिंगटनम् अभिजानन् स नायकः लज्जितो भूत्वा क्षमाम् अयाचत।

## शब्दार्थः

*द्वारादिनिर्माणहेतोः = द्वार आदि के निर्माण के लिए। उत्थाप्य = उठाकर। काष्ठस्य = लकड़ी का। यानम् = सवारी। आरोपयितुं = चढ़ाने के लिए। यतमानाः = प्रयत्नशील। अतिभारवत्वात् = अधिक भारी होने से। अक्षमाः = असमर्थ। दूरतः = दूर से। तुरगाधिरूढः = घोड़े पर सवार। सुकरम् = सरल (आसान)। परिधानम् = वस्त्र। आगच्छन् = आता हुआ। अश्वसादी = घुड़सवार। अवधेयम् = याद रखें। प्राशंसन् = प्रशंसा किये। आपतेत् = आये। स्मर्यताम् = याद करें। अभिजानन् = जानते हुए।*

***अभ्यासः***

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*द्वारादिनिर्माणहेतोः काष्ठस्य उत्थाप्य स्मार्यताम्*

*अतिभारवत्त्वात् आपतेत् आरुह्य आगमिष्यति*

2. *पूर्णवाक्येन उत्तरत -*

(*क*) *किमर्थं काष्ठस्य गुरुतरः खण्डः नीयते स्म*?

(*ख*) *सैनिकाः कथं बहुप्रत्यये अपि अक्षमाः जाताः* ?

(*ग*) *कः दूरतः एव अधिकबलप्रयोगाय तान् प्रेरयति स्म* ?

(*घ*) *तुरगाधिरूढः पुरुषः सैनिकान् विलोकयन् नायकं किम् अवदत्* ?

3. *अधोलिखितपदानां विभक्तिं वचनं च लिखत -*

*पदम् विभक्तिः वचनम्*

*यथा- सैनिकानाम् षष्ठी बहुवचनम्*

*अश्वाद्* .................. ....................

यान्ने .................... .....................

क्षमाम् .................... .....................

4. अधोलिखितक्रियापदानां लकारं पुरुषं वचनं च लिखत -

क्रियापदम् लकारः पुरुषः वचनम्

यथा- अवदत् लङ्.लकारः प्रथमपुरुषः एकवचनम्

भवन्ति ................... ................ ..................

आसीत् .................. ................ ..................

गमिष्यति .................. ................ ..................

अकरोत् .................. ................ ..................

5. उपसर्गं लिखत -

पदम् उपसर्गः

यथा- अधिरूढः ...अधि...

प्रोवाच ..................

अभिजानन् ..................

विलोकयन् ..................

6. मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत -

आवासाय, काष्ठखण्डम्, नायकः, अश्वसादी, वायुयानस्य।

(क)...................... सैनिकान् प्रेरयति

(ख)...................... गतिः तीव्रा भवति।

(ग)..................... अश्वाद् अवातरत्।

(घ) भूमे उत्थाय .................आरोपयितुम्।

7. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) सैनिकों के आवास के लिए निर्माणकार्य चल रहा था।

(ख) उन सैनिकों का एक नायक भी था।

(ग) वह घुड़सवार घोड़े से उतरा।

(घ) कोई भी कार्य बड़ा या छोटा नहीं होता।

(ङ) मैं खाता हुआ नहीं चलता हूँ।

(च) मैं हँसता हुआ पानी नहीं पीता हूँ।

शिक्षण-सङ्केतः

1.कक्षायां छात्रैः पाठस्य अनुच्छेदानां वाचनं कारयत तथा हिन्दीभाषायाम् अर्थ-लेखनस्य गतिविधिं कारयत।

2.'कर्मप्रधानं जगत्' इत्युक्तौ संस्कृते पञ्चवाक्यानि लेखयत।

आत्मवत् सर्वभूतेषु यः पश्यति सः पण्डितः।

## नवमः पाठः

# सुभाषितानि

*क्षणशः कणशश्चैव विद्यामर्थं च चिन्तयेत्।*

*क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम्।* 1।

*प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्।*

*तृतीये नार्जितो पुण्यं चतुर्थे किं करिष्यति।* 2।

*सर्वतीर्थमयी माता सर्वदेवमयः पिता।*

*मातरं पितरं तस्मात् सर्वयत्नेन पूजयेत्।* 3।

*प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः।*

*तस्मात् तदेव वक्तव्यं वचने का दरिद्रता।* 4।

*सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।*

*प्रियं च नानृतं ब्रूयाद् एष धर्मः सनातनः* । 5।

*जाड्यं धियो हरति सिञ्चति वाचि सत्यं*

*मानोन्नतिं दिशति पापमपाकरोति।*

लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं

सत्सङ्गतिः कथय किं न करोति पुंसाम्। 6।

**शब्दार्थः**

क्षणशः = प्रतिपल। चिन्तयेत् = चिन्तन करना चाहिए। नार्जिता = नहीं प्राप्त किया। तुष्यन्ति = तुष्ट होते हैं। वक्तव्यम् = बोलना चाहिए। अनृतम् = झूठ। जाड्यं धियः = बुद्धि की जड़ता। पापमपाकरोति = ( पापम्+अपाकरोति) पापों को दूर करती है। तनोति = फैलाती है। दिक्षु = दिशाओं में। पुंसाम् = व्यक्तियों

**अभ्यासः**

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

क्षणशः कणशश्चैव सर्वदेवमयः पूजयेत्

ब्रूयात् मानोन्नतिम् पापमपाकरोति सत्सङ्गतिः

2. एकपदेन उत्तरत -

(क) क्षणत्यागे किं न भवति?

(ख) द्वितीये किं नार्जितम्?

(ग) सर्वतीर्थमयी का अस्ति?

(घ) सर्वे जन्तवः केन तुष्यन्ति?

(ङ) कीदृशं प्रियं न ब्रूयात्?

3. वाक्यानि पूर्तिं कुरुत -

(क) कणत्यागे कुतः ................ ।

(ख) तृतीये नार्जितः ............... ।

(ग) सर्वदेवमयः .................. अस्ति ।

(घ) प्रियवाक्यप्रदानेन सर्वे ............. तुष्यन्ति।

4. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) माता-पिता की पूजा करनी चाहिए।

(ख) समय का पालन करो।

(ग) बोलने में कैसी दरिद्रता ?

(घ) प्रिय तथा सत्य बोलना चाहिए।

(ङ) प्रियवाक्य प्रदान करने से सभी जन्तु तुष्ट होते हैं।

5. उपयुक्तकथनानां समक्षम् 'आम्' अनुपयुक्तकथनानां समक्षं 'न' इति लिखत -

(क) कणत्यागे धनं न भवति।

(ख) विद्यार्थिजीवने विद्या न अर्जनीया।

(ग) मातरं पितरं च सर्वयत्नेन पूजयेत्।

(घ) प्रियवाक्यप्रदानेन सर्वे जन्तवः न तुष्यन्ति।

(ङ) सत्संङ्गतिः किमपि पुंसां न करोति।

6. अधोलिखित-क्रियापदानां लकारं पुरुषं वचनं च लिखत -

*क्रियापदम् लकारः पुरुषः वचनम्*

*चिन्तयेत्* .................. ............ ...................

*करिष्यति* .................. ............ ..................

*ब्रूयात्* .................. ............ ..................

*सिञ्चन्ति* .................. ............ ..................

**7. *रेखांकितपदानि अधिकृत्य प्रश्ननिर्माणं कुरुत -***

*यथा- परिश्रमेण सफलता मिलति। केन सफलता मिलति* ?

(*क*) *मधुरवचनेन जनाः प्रसन्नाः भवन्ति*।

(*ख*) *व्यायामेन शरीरं स्वस्थं भवति*।

(*ग*) *मातुः आज्ञां पालयेत्*।

(*घ*) *वृक्षैः प्राणवायुः प्राप्यते*।

***शिक्षण-सङ्केतः***

1. *सुभाषितश्लोकानां सामूहिकगानं कारयत*।

2. *श्लोकानां हिन्दीभाषायाम् अर्थं लेखयत*।

***एतदपि जानीत-***

*कुछ पशु-पक्षी के संस्कृत नाम-*

*दर्दुरः* = *मेढक*। *वृकः* =*भेड़िया*।

***मार्जारी =बिल्ली। वृषभः= बैल।***

***बलाकः =बगुला। धेनुः =गाय।***

***षट्पदः =भौंरा। गजः= हाथी।***

***लूता= मकड़ी। मेषः =भेंड़।***

***कुक्कुटः =मुर्गा। भल्लूकः =भालू।***

***चातकः= पपीहा। वानरः =वानर।***

***घोटकः/अश्वः= घोड़ा। कपोतः =कबूतर।***

***चटका= गौरैया। शृगालः =सियार।***

## ***अतिस्नेहः पापशङ्की***

दशमः पाठः

# निम्बतरोः साक्ष्यम्पु

पुरा एकस्मिन् ग्रामे मनोहरः धर्मचन्दश्च द्वे मित्रे प्रतिवसतः। तौ विदेशात्धनं अर्जयित्वा नीतवन्तौ। तौ विचारितवन्तौ यद् गृहे इदं धनं सुरक्षितं न स्यात्। एवं विमृश्य तद् धनम् एकस्य वृक्षस्य मूले गर्त्तं विधाय निक्षिप्तवन्तौ। द्वयोर्मध्ये परस्परं मतैक्यम् अभवत् यत् यस्मै आवश्यकता भविष्यति स अपरेण सह आगत्य निष्कास्यति। मनोहरः सरलः सत्यनिष्ठः चासीत् किन्तु धर्मचन्दः अतीव चतुरः छद्मबुद्धिश्च आसीत्।

धर्मचन्दः अन्येद्युः निभृतं गत्वा सर्वं धनम् आहृतवान्। ततश्च धर्मचन्दः मनोहरम् अवोचत्-" मित्र । चलतु, किञ्चद् धनम् आहर्तव्यम्।" द्वौ अपि वृक्षस्य अन्तिकम् आगतवन्तौ। तत्र धनं नासीत्। धर्मचन्दः मनोहरम् आक्षिप्तवान् यत्तेन धनम् अपहृतम् इति। ततस्तौ विवदमानौ राजानं प्रति गच्छतः। द्वयोः विवादं श्रुत्वा राजा अब्रवीत्-"भवतु नाम, श्वः निम्बवृक्षस्य साक्ष्यम् अवाप्य एव कश्चित् निर्णयः भविता।"सत्यनिष्ठः मनोहरः विचारितवान् यद् इदमेव समीचीम्। निम्बतरुः असत्यं न वक्ष्यति। धर्मचन्दोऽपि प्रसन्नः आसीत्।अपरेद्युः राजा द्वाभ्यां सह निम्बवृक्षं प्रत्यगच्छत्। तैः सह समुत्सुकानां जनानां सम्मर्दः अपि आसीत्। ते सर्वे सत्यं ज्ञातुं वा ´्छन्ति स्म।

*राजा निम्बवृक्षं पृष्टवान्-"हे निम्बदेव! कथय, धनं केन अपहृतम् ?""मनोहरेण" - इति निम्बमूलात्स्वरः प्रकटितः। एतत् श्रुत्वा मनोहरः बाष्पकण्ठः रुरोद अब्रवीत् च-" महाराज! एष निम्बतरुः असत्यं वक्तुं नार्हति। अत्र काचित् छद्मयोजना वर्तते। अहं सद्य एव प्रमाणितं करोमि।" मनोहरः शुष्केन्धनं संहृत्य वृक्षमूले निधाय अग्निं प्रज्वालितवान्। तत्कालमेव वृक्षमूलात्- "रक्षतु-रक्षतु" इति स्वरसंयोगः श्रुतः। राजा सैनिकान् आदिष्टवान्- तत्रयोऽपि भवेत् तं बहिः आनयतु।" सैनिकाः वृक्षकोटरे स्थितं जनं बहिः आनीतवन्तः। तं दृष्टवा सर्वे विस्मृताः आसन्। यतोहि स धर्मचन्दस्य वृद्धः पिता आसीत्। राजा सर्वम् अपि ज्ञातवान्। स पितरं पुत्रञ्च काशगारे निक्षिप्तवान्। अपि च, तत्सर्वम् धनम् सपुरस्कारं मनोहराय समप्र्य तं सभाजितवान्। विमृश्यत्र सोचकर। गर्त्तत्र गड्ढा। द्वयोर्मध्ये त्र दोनों के बीच में। छद्मबुद्धिः त्र बेईमान। आहृतवान् त्र निकाल ले आया। अन्तिकम् त्र समीप। भवतु नाम त्र जाने दीजिए। अपरेद्युः त्र दूसरे दिन। समुत्सुक त्र अत्यधिक आतुर। सम्मर्दः त्र भीड़। बाष्पकण्ठः त्र रुंधे गले से। सद्य एव त्र शीघ्र ही। शुष्केन्धनं त्र सूखी लकड़ियाँ। संहृत्य त्र इक्कठा करके। निधाय त्र रखकर। स्वरसंयोगः त्र आवाज का संयोग। विस्मृताः त्र विस्मित या आश्चर्य चकित। सभाजितवान्त्र पुरस्कृत किया। विश्रम्भात् त्र विश्वास*

**अभ्यासः**

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*धर्मचन्दश्च निक्षिप्तवन्तौ द्वयोर्मध्ये*

*मतैक्यम् निष्कास्यति सत्यनिष्ठः*

*छद्मबुद्धिश्च आहृतवान् आहर्तव्यम्*

2. *एकपदेन उत्तरत-*

*यथा- मनोहरस्य मित्रं कः आसीत* ? *धर्मचन्दः*

(*क*) *तौ अर्जितधनं कुत्र निक्षिप्तवन्तौ* ?

(*ख*) *मनोरस्य स्वभावः कीदृशः आसीत्* ?

(*ग*) *अन्येद्युः सर्वं धनं कः आहृतवान्* ?

(*घ*) *वृक्षकोटरे कः आसीत्* ?

3. *म×जूषातः क्रियापदानि चित्वा वाक्यानि पूरयत-*

(*क*) *तौ विदेशात् धनं* ......................*नीतवन्तौ*।

(*ख*) *धर्मचन्दः अतीव चतुरः*..................*आसीत्*।

(*ग*) *ततस्तौ विवदमानौ* ...................*प्रति गच्छतः*।

(*घ*) *निम्बतरु*........................... *न वक्ष्यति*।

(ड़) *स पितरं पुत्र ्च करागारे*.....................।

4. *रेखांकित पदेषु कारकस्य नामोल्लेखं कुरुत-*

*यथा- स ग्रामं गच्छति*। (*कर्म कारकम्*)

(*क*) *तौ विदेशात् धनं अर्जयित्वा नीतवन्तौ*

(*ख*) *स अपरेण सह आगत्य निष्कास्यति*

(*ग*) *द्वौ अपि वृक्षस्य अन्तिकम् आगत्वन्तौ*

(घ) राजा सैनिकान् आदिष्टवान्

(ङ) सैनिकाः वृक्षकोटरे स्थितं जनं आनीतवन्तः

5.सन्धि-विच्छेदं कुरुत-

पदम् सन्धि-विच्छेदः

(क) धर्मचन्दश्च .................................

(ख) द्वयोर्मध्ये .................................

(ग) समुत्सुकानाम् ...................................

(घ) शुष्केन्धनम् ..................................

अर्जयित्वा, छद्मबुद्धिश्च, राजानं, असत्य,ं निक्षिप्तवान्।

6.रेखांकितपदानि अधिकृत्य प्रश्पनिर्माणं कुरुत-

(क) एकस्मिन् ग्रामे द्वे मित्रे प्रतिवसतः।

(ख) तौ विदेशात् धनं अर्जयित्वा नीतवन्तौ।

(ग) धर्मचन्दः अतीव चतुरः छद्मबुद्धिश्च आसीत्।

7-संस्कृतभाषायाम् अनुवादं कुरुत-

(क) एक गाँव में दो मित्र रहते थे।

(ख) वे दोनों विदेश से धन अर्जित कर ले आये।

(ग) मनोहर सरल और सत्यनिष्ठ था।

(घ) *सैनिक वृक्ष के कोटर में स्थित व्यक्ति को बाहर ले आये।*

***शिक्षण- सङ्.केतः***

1. *बालकैः स्वशब्देषु कथां लेखयत।*

2. *अन्यकथां श्रोतुं श्रावयितुं च कथयत।*

***ध्यातव्यम्-***

*विभक्तिः द्विविधा भवति-* 1 *कारकविभक्तिः।* 2 *उपपदविभक्तिः।*

1. *कारकविभक्तिः- क्रियाम् आदाय या विभक्तिः भवति सा कारकविभक्तिः भवति, यथा- रमेशः ग्रामं*

*गच्छति, वीरेन्द्रः कन्दुकेन खेलति।*

2. *उपपदविभक्तिः- पदम् आश्रित्य प्रयुक्ता विभक्तिः 'उपपदविभक्तिः' इति कथ्यते;यथा- ग्रामं परितः वृक्षाः सन्ति (गाँव के चारों ओर वृक्ष हैं)। रामेण सह लक्ष्मणः गच्छति। अत्र 'परितः' (चारोंओर) इति योगे ग्रामपदात् द्वितीया तथा च 'सह' इति योगे रामपदात् प्रयुक्ता तृतीया विभक्तिः*

*उपपदविभक्तिः अस्ति।*

*लोभात्, प्रमादात्, विश्रम्भात् त्रिभिर्नाशो भवेन्नृणाम्*

## एकादशः पाठः

## सिंह-दिलीपयोः संवादः

(महाराजः दिलीपः सिंहं हन्तंु धनुः आकृष्य सज्जः भवति।)

सिंहः- (उच्चैः हसन्) महीपाल! तव श्रमः वृथा। भवान् मां हन्तुं समर्थः न भविष्यति।

दिलीपः-भवान् कः ? किम् इच्छति ?

सिंहः- भगवतः शड.्करस्य सेवकः अहं कुम्भोदरः अस्मि। अहम् एतां धेनुं हनिष्यामि।

दिलीपः-भवान् एवं कथं वदति ?

सिंहः- माता पार्वती इमं देवदारुवृक्षं पुत्रवत् पालितवती। एकदा एकेन गजेन अस्य वृक्षस्य त्वक् उच्छिन्नम्। गजस्य दुष्कृतेन माता दुःखिता अभवत्। ततः प्रभृति महादेवेन एतस्य रक्षणार्थम् अहम् आदिष्टः। तदा प्रभृति अस्यां गुहायां स्थितोऽस्मि। अद्य भाग्यवशात् एषा धेनुः आगता। अतएव एतां धेनुं त्यजतु।

दिलीपः-कुम्भोदर! देवानां देवः महादेवः जगतः रक्षकः परिपालकश्च। परन्तु इयं गुरोः धेनुःमया निश्चयेन रक्षणीया। एतदर्थं एतां परित्यज्य मां भक्षतु।

सिंहः-(विहस्य) विस्तृतं साम्राज्यं, नवं यौवनं सुन्दरं शरीरं च विहाय किमर्थं भवान्

*एकस्याः धेनोः रक्षार्थैः स्व प्राणान् त्यक्तुमिच्छति। त्यजतु मूर्खत्वम्। धेनोः जीवनस्य अपेक्षया भवतां जीवनं वरम्। यतोहि भवान् जीवितश्चेत् सर्वासां प्रजानां सम्यक् पालनं भविष्यति।*

*दिलीपः-"क्षतात् त्रायते" इति क्षत्रियः कथ्यते। क्षत्रियः सन् मया धेनुः निश्चयेन रक्षणीया। क्षत्रियत्वे नष्टे सति नास्ति कि ्चित् प्रयोजनं राज्येन प्राणैः वा। अतएव मम शरीरं भक्षयतु। इमां धेनुं त्यज।*

*सिंहः-भवतु, स्व शरीरं समर्पयतु।*

*(यावत् राजा सिंहस्य पुरतः अवनत्य स्वशरीरं समर्पयति तावत् सिंहः अन्तर्हितः भवति।)*

*नन्दिनी (धेनुः)- राजन्। मया भवान् परीक्षितः। शरणागतानां परित्राणाय भवतः, अनुपमया निष्ठया अहं नितरां प्रसन्नः। अचिरमेव ते कामना पूर्णा भविष्यति।*

*हन्तुम् - मारने के लिए। वृथा -व्यर्थ। महीपाल -राजा। पालितवती = पालन की। त्वक् =त्वचा। (पेड़ की छाल) उच्छिन्नम्= छील दिया। दुष्कृतेन = दुष्टता से। रक्षणार्थम् = रक्षा करने के लिए अदिष्टः = आदेशित किया गया। अस्यां गुहायाम् = इस गुफा मंें। धेनुः = गाय। ममार्थं= मेरे लिये। त्यजतु (त्यज्) =छोड़िए। परिपालकः =पालन करने वाला। रक्षणीया= बचाना चाहिए। मूर्खत्वम् =मूर्खता। वरम्=श्रेष्ठ। क्षतात् त्रायते= विपत्ति अथवा चोट से बचाता है। क्षत्रियत्वे नष्टे सति =क्षत्रियता के नष्ट होने पर। कोटिशः= करोड़ांे। दातुम् =देने के लिये। प्रयोजनम्= उद्देश्य। इमां धेनुम्= इस गाय को। अवनत्य =झुककर। अन्तर्हितः = अन्तर्धान हो गया। गृहीता =ली। शरणागतानां परित्राणाय= शरण में आये हुए की रक्षा के लिए। नितराम्= अत्यधिक। आशिषा =आशीर्वाद से। आत्मानुगणं पुत्रम्= अपने जैसा पुत्र।*

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*सिंह-दिलीपयोः हनिष्यामि आत्मानुगुणम् उच्छिन्नम् दुष्कृत्या स्थितोऽस्मि परित्यज्य त्यक्तुमिच्छति जीवितश्चेत् क्षतात् क्षत्रियत्वे अन्तर्हितः*

***अभ्यासः***

*माता, पुत्रवत्, भवान्, त्यज, क्षतात्।*

2.*पूर्णवाक्येन उत्तरत -*

(*क*) *कुम्भोदरः कस्य सेवकः आसीत्* ?

(*ख*) *माता पर्वती कं वृक्षं पुत्रवत् पालितवती* ?

(*ग*) *क्षतात् कः त्रायते* ?

(*घ*) *राजा कस्य पुरतः अवनत्य स्वशरीरं समर्पयति*?

3-*निम्ननलिखित पदानि निर्देशानुसारं परिवर्तयत-*

*यथा सिंहः* (*प्रथमा बहुवचने*) *सिंहाः*

*बालकः* (*प्रथमा बहुवचने* ) .........

*वानरः* (*तृतीया एकवचने*) .........

*कुम्भोदरः* (*द्वितीया एकवचने*) ........

*गजः* (*षष्ठी बहुवचने*) .........

4.-*वाक्यशुद्धिं कारयत-*

(*क*) *इमं देवदारु वृक्षं पुत्रवत् पालितवती।*

(ख) तावत् अस्य गुहायां स्थितोऽस्मि ।

(ग) इयं गुरोः धेनुः मया निश्चयेन रक्षणीया।

(घ) इमां धेनं ु त्यज।

**5-सन्धि-विच्छेदं कुरुत-**

पदम् सन्धि-विच्छेदः

यथा- रक्षणार्थम्त्र रक्षण+अर्थम्

ममार्थम्त्र ...........

उच्छिन्नम्त्र ..........

स्थितोऽस्मित्र ..........

**6.-म×जूषातः पदानि चित्वा वाक्यानि पूरयत-**

माता पुत्रवत् भवान् त्यज क्षतात्

(क) इमं देवदारुवृक्षं...................पालितवती।

(ख) गजस्य अनया दुष्कृत्या.................अतीव दुःखिता अभवत्।

(ग) ........................मां हन्तुं सर्मथः न भविष्यति।

(घ) ...........................त्रायते इति क्षत्रियः।

(ङ) इमां धेनुं..........

**7- अधोलिखितपदानि प्रयुज्य वाक्यरचनां कुरुत-**

*यथा- वृक्षः- अत्र एकः आम्र वृक्षः अस्ति।*

*सिंहः*

*राजा*

*सेवकः*

*ध्यातव्यम्ह*

*निष्यामि-हन् धातुनां लृटलकारे उत्तम पुरुषस्य एक वचने इंद रूपं भवति। एवमेव पठिष्यामि भविष्यामि, करिष्यामि, चेत्यादीनि रूपाणि लृटलकारे भवन्ति।*

***शिक्षण सङ्.केतः-***

*छात्रैः विविध कार्यक्रमेषु अस्य नाटकस्य अभिनयं कारयत।*

*एतदपि जानीत- रामायणे सप्तकाण्डानि-*

1. *बालकाण्डम्* 2. *अयोध्याकाण्डम्* 3. *अरण्यकाण्डम्* 4. *किष्किन्धाकाण्डम्* 5. *सुन्दरकाण्डम्* 6. *युद्धकाण्डम्* 7. *उत्तरकाण्डम्*

*रामायणं महाभारतं च आर्ष काव्य रूपेण ज्ञायेते।*

## द्वादशः पाठः

# आदिकविः वाल्मीकिः

*पुरा वाल्मीकिः नाम एकः ऋषिः आसीत्। एकदा सः शिष्यैः सह स्नातुं तमसानद्याः तीरम् अगच्छत्।*

*मार्गे सः व्याधेन विद्धम् एकं क्रौ ्चपक्षिणमपश्यत्। सहचरस्य वियोगेन व्याकुलितायाः क्रौ च्याः उच्चैः क्रन्दनम् अशृणोत्। तत् श्रुत्वा तस्याः दयनीयां दशां दृष्ट्वा कारुणिकः ऋषिः द्रवितोऽभवत्। क्रौ ्चीक्रन्दनात् जातः ऋषेः शोकः श्लोकरूपेण तस्य मुखात् एवं निरगच्छत्-मा निषाद*

!

*ऋषेः कवित्वं विज्ञाय ब्रह्मा आकाशवाण्या आदिशत्- "ऋषे! कुरु रामायणं काव्यम्। तत्र च रामचरितं वर्णय, येन रामस्य पुण्यं चरित्रं विदित्वा लोकाः*

सन्मार्गस्यानुसरणं कुर्युः।" ब्रह्मणः आदेशानुसारेण वाल्मीकिना श्लोकबद्धा रामायणीकथा लिखिता। सैव वाल्मीकीयरामायणनाम्ना प्रसिद्धा।

अस्मिन् काव्ये वाल्मीकिना पितुः आज्ञापालनम् , भ्रातृस्नेहः, परोपकारः, दया, दाक्षिण्यम्, दीनरक्षा इत्यादीनि मानवतायाः पोषकानि जीवनमूल्यानि वर्णितानि सन्ति। अयं कविः संस्कृतस्य आदिकविः उच्यते तद्रचना च आदिकाव्यम् उच्यते।

**शब्दार्थः**

व्याधेन = बहेलिया द्वारा। क्रौञ्चपक्षिणम् = क्रौञ्च नामक पक्षी को। उच्चैः = जोर-जोर से। क्रन्दनम् = विलाप को, चीख़ को। कारुणिकः = दयालु। निषाद! = हे व्याध। प्रतिष्ठाम् = सम्मान। ततः प्रभृति = से लेकर। विज्ञाय = जानकर। विदित्वा = जानकर। दाक्षिण्यम् = उदारता, अनुकूलता। जीवनमूल्यानि = आदर्श जीवन के मूल्य।

**अभ्यासः**

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

तमसानद्याः व्याकुलितायाः का चीक्रन्दनात्

यत्क्रौञ्चमिथुनादेकम् सन्मार्गस्यानुसरणम् दाक्षिण्यम्

2. पूर्णवाक्येन उत्तरत-

(क) वाल्मीकिः स्नातुं कुत्र अगच्छत् ?

(ख) किं श्रुत्वा किं दृष्ट्वा च ऋषिः द्रवितोऽभवत् ?

(ग) ब्रह्मा आकाशवाण्या वाल्मीकिं किम् आदिशत् ?

(घ) वाल्मीकिना श्लोकबद्धा का कथा लिखिता ?

